भूमौ स्थानमिदं श्रेष्टं स्थानात्तीर्थं महत्तरम् ।
तीर्थाच्चिदम्बरं श्रेष्टं श्रेष्टो मन्त्राच्चिदम्बरात् ॥
मन्त्रान्महेश्वरो देवः महादेवो महानटः ।
देवात् श्रेष्ठतमस्तस्य श्रीमान्ताण्डव भूषितः ॥
भवाम्भोधिमहापोतः पादःपङ्कारुणच्छविः ।
तस्य दर्शनमात्रेण सकृत्पापी च मुच्यते ॥
किंपुनः सुकृती क्षेत्रवासी नित्यनिरीक्षकः । चि. मा. 24-42

तथा अम्बायाः ताडङ्कं उत्तममिति सिध्दम् । ईश्वरस्य कुञ्चितचरणं च अम्बाया एव इति तत्वम् । वामभागस्य अम्बारूपत्वात् इति बोध्यम् । आपादमस्तकं वर्णनीयमिति रीतिमनुसृत्य कुञ्चितचरणस्य वर्णनं अम्बायाः ताडङ्कवर्णनेन पूरितं भवति । एतादृश महामहिम शालिन्याः, (1) ब्राह्मी (2) वैष्णवी (3) ऐन्द्री (4) कौमारी (5) रौद्री (6) वाराही (7) चामुंडी इति सप्तमातृनिषेवितायाः, ज्ञानशक्तिस्वरूपिण्याः श्री शिवकामसुन्दर्यम्बायाः चरणकमलताडङ्कदर्शनेन, पूजनेन, उपासनेन, च ऐहिकामुष्मिकफलसिध्दिं सर्वेऽपि वयं प्राप्नुयाम । इतिं ।

देव्या यया ततमिदं जगदात्मशक्त्या
निश्शेषदेवगणशक्तिसमूहमूर्त्या ।
तामम्बिकामखिलदेवमहर्षिपूज्यां
भक्त्या नताःस्म विदधातु शुभानिं सा नः ॥
देवि, त्र्यम्बकपत्निं, पार्वत्ति, सति, त्रैलोक्यमात, श्शिवे,
शर्वाणिं, त्रिपुरे, मृडानिं, वरदे, रुद्राणिं, कात्यायनिं, ।
भीमे, भैरवि, चण्डि, शर्वरि, कले, कालक्षये, शूलिनि,
श्रीमत्श्रीशिवकामसुन्दरि, सदा पर्याकुलान्पाहिनः ॥

देवींश्रीनटराजराजसदनप्रत्यक्स्थले संस्थितां
पश्यन्तींस्वपतिं शिवं च पुरतः गङ्गात्मना संस्थितम् ।
ध्यायन्तीं दहरस्वरूपमनिशं श्रीचित्सभासंस्थितं
वन्दे श्रीशिवकामसुन्दरि ? सदा त्वत्पादभक्तानव ॥

इतः पूर्ववर्णितं अस्य पद्यस्प याख्यानमेवेति बोध्यम् ॥

॥ इति शिवम् ॥



